# लौकिकसंस्कृतसाहित्यम्

## गद्यकाव्यानां कवीनां च परिचयः ।

- सुबन्धुः बाणभट्टस्य पूर्ववर्ती कविरासीत् ।
- वाङ्मयेऽस्मिन् अस्य 'वासवदत्ता' इति एकमेव गद्यकाव्यमुपलभ्यते ।
- गौडिशैलि-रचनायाम् अस्य निपुणता अवर्तत ।

**Contd…..**

बहूनां विदुषां वाक्षु अस्य प्रशस्तिः इत्थं कृता –

- ‘अलब्धवैदग्ध्यविलासमुग्धया धिया निबद्धेयमति द्वयी कथा ।

  (अत्र द्वयी नाम बृहत्कथा तथा वासवदत्ता चेति ।)

- ‘सुबन्धुर्बाणभट्टश्च कविराज इति त्रयः ।

  वक्रोक्तिमार्गनिपुणाः चतुर्थो विद्यते न वा ॥’

- सहृदयलोकसुबन्धुर्जयति श्रीभट्टबाणकविराजः ।

- अस्मिन् राजकुमारस्य कन्दर्पकेतोः राजकुमार्या वासवदत्तया सह प्रणयः, विवाहश्च प्रधानः वृत्तान्तः ।
- अस्य वृत्तान्तः पूर्णतः कविकल्पितः ।
- काव्यस्य अस्य भाषा ओजगुणसम्पन्ना, समासबाहुल्या, क्लिष्टपदावली, वैदुष्यविलासमयी अस्ति ।
- गद्यकाव्येऽस्मिन् श्लेष-परिसङ्ख्या-विरोधाभासादीनाम् अलङ्काराणां प्रयोगः दृश्यते ।

- दशकुमारचरितम्, अवन्तीसुन्दरीकथा चेति अस्य कथाकाव्यरचने द्वे ।
- काव्यादर्शः इति कश्चन आलङ्कारिक-लक्षण-ग्रन्थः ।
- महाकवेः भारवेः अयं प्रपौत्रः ।
- ‘त्रयो दण्डिप्रबन्धाश्च त्रिषु लोकेषु विश्रुताः’ इति अस्य प्रशस्तिः ।

**Contd……**

- अस्य कवेः शैली सरला, सुलभतरा च । अतः 'दण्डिनः पदलालित्यम्' इत्युक्तिः प्रसिद्धा जाता ।
- स्निग्ध-सुन्दरपदसमूहैस्सह रचना अस्य वैशिष्ट्यम् ।
- दण्डिनः भावभाषामाधुर्यं, रचनाकौशलं, मनोभावाभिव्यञ्जनदक्षत्वं च निरीक्ष्य 'कविर्दण्डी कविर्दण्डी कविर्दण्डी न संशयः' इति उद्घोष्यते बुधजनैः ।

- संस्कृतवाङ्मये दशकुमारचरितम् एकम् उत्कृष्टं कथासाहित्यम् अस्ति ।
- काव्यमिदं त्रिधा विभज्यते –

i. पूर्वपीठिका – अत्र पञ्च उच्छ्वासाः सन्ति ।

ii. चरितम् –अस्मिन् भागे अष्ट उच्छ्वासाः सन्ति ।

iii. उत्तरपीठिका – अत्र उपसंहारः अस्ति ।

- अस्य काव्यस्य आरम्भः पुष्पपुरप्रदेशस्य राजाराजहंसस्य तथा तस्य पत्न्याः वसुमत्याः वर्णनेन भवति ।

**Contd…..**

- राजकुमारस्य राजवाहनस्य प्रादुर्भावः, मन्त्रीणां पुत्राणाम् उत्पत्तिः, दशकुमाराणां दिग्विजययात्रा, विलासः, तेषां स्व-स्व-राजकुमारीभिः साकं परिणयः, राज्यप्राप्तिः इत्यादयः अस्य वृत्तान्तस्य प्रमुखाः अंशाः ।
- अस्य गद्यकाव्यस्य शैली सरसा, ललिता, प्रसादमयी च अस्ति ।
- अस्मिन् चौरशास्त्रं, राजनीतिशास्त्रं, व्यावहारिकज्ञानं च अधिकृत्य उपदेशाः पदे-पदे दृश्यन्ते ।

- अयं कविः सम्राजो हर्षवर्धनस्य आस्थानकविरासीत् ।
- हर्षचरितं, कादम्बरी चेति ग्रन्थौ अस्य कृती ।
- पदपरिष्कृतरचनाशैल्यां, मनोभावाभिव्यक्त्याम् अयं कविः गरिष्ठः वरिष्ठः च । अतः साधूक्तम् – 'बाणः कवीनामिह चक्रवर्ती' इति ।
- अस्य वस्तुविवृतौ वर्णने च अपूर्वं वैशारद्यं वीक्ष्य मन्त्रमुग्धत्वमनुभवन्ति मनीषिणः ।

**Contd……**

- अस्य कवेः वर्णनानां व्यापित्वात्, सर्वाङ्गीणत्वात्, सूक्ष्मतमविवरणसमन्वितत्वाच्च ‘बाणोच्छिष्टं जगत्सर्वम्’ इति भूयो भूयो व्यादिश्यते ।
- वाग्देवी सरस्वत्येव प्रागल्भ्यमधिकम् अवाप्तुं बाणकविरूपेण जनिं लेभे इति ‘वाणी बाणो बभूव ह’ श्रीगोवर्धनाचार्यः प्रतिपादयामास ।
- अयं कविः पाञ्चालीरीतेर्मूर्धन्यः कविः ।
- अयं कविः रससिद्धः । शृङ्गाररसोऽस्य प्रेष्ठो रसः । अतः उक्तिरियं प्रसिद्धा जाता –

‘हर्षो हर्षो हृदयवसतिः पञ्चबाणस्तु बाणः’ ।

- वागीशस्य बाणभट्टस्य ‘कादम्बरी’ इति रचनायाः काव्यजगति विशिष्टस्थानमस्ति इति कथने नास्ति मनागपि संशयः ।
- इयं कवेः काल्पनिका सृष्टिः ।
- अस्याः कृत्याः नायिका कादम्बरी, चन्द्रापीडश्च अस्याः नायकोऽस्ति ।
- कादम्बरी-चन्द्रापीडयोः तथा महाश्वेता-पुण्डरीकयोः प्रणयकथा अस्य काव्यस्य वृत्तान्तः ।

**Contd.......**

- चन्द्रापीडमुपदेष्टुं प्रवर्तमानः शुकनासो युवराजस्य पितुः तारापीडस्य सभायां रत्नमिव अमात्य आसीत् ।
- काव्येऽस्मिन् वर्णनलालित्यं, शिल्पविधानस्य सौन्दर्यं, सत्यानुसन्धानस्य महती शक्तिः इत्यादि सर्वमपि अद्वितीयम् ।
- शूद्रकवर्णनं, चाण्डालकन्यावर्णनं, विन्ध्याटवीवर्णनं, पम्पासरोवर्णनं, प्रभातवर्णनं, शबरसेनापतिवर्णनं, हारीतवर्णनं, जाबाल्याश्रमवर्णनं, सन्ध्यावर्णनम्, उज्जयिनीवर्णनं, तारापीडावर्णनं, महाश्वेतावर्णनं, कादम्बरीवर्णनञ्च इत्यादीनि साङ्गोपाङ्गवर्णनानि कविना बहुत्र उपस्थाप्यन्ते ।

**Contd.......**

- भाषा भावानुकूला, रसानुकूला, एवं भावस्य च समन्वयेन क्वचित् समासबहुला पदावली, क्वचित् समासरहिता, प्रसादमाधुर्यगुण-समवेता सालङ्कृता च पदपङ्क्तिः दृश्यते अस्मिन् काव्ये ।
- अतः लोकप्रसिद्धा उक्तिरियं जाता-

‘कादम्बरी रसज्ञानाम् आहारोऽपि न रोचते ।’

# हर्षचरितम्



- इतिहासकाव्येषु इयम् आख्यायिका सुप्रसिद्धा ।
- इदम् अष्टसु उच्छ्वासेषु विभक्तम् ।
- आदिमे उच्छ्वासद्वये कविः स्वस्य जीवनचरितं वर्णयामास ।

**Contd……**

- शेषेषु षट्सु उच्छ्वासेषु सम्राजो हर्षवर्धनस्य वंशक्रमः, जीवनचरितं, राज्यं, राज्यपालनम् इत्यादिकञ्च प्रतिपादयामास कविः ।
- मुमूषोः नृपस्य प्रभाकरवर्धनस्य वर्णनं, वैधव्य-दुःखपरिहाराय सतीत्वमाश्रयन्त्या यशोवत्या वर्णनं, सिंहनादस्य उपदेशः, दिवाकरमित्रस्य राज्यश्री-सान्त्वनम् इत्यादिषु सन्निवेशेषु कवेः वर्णनाचातुर्यं बहुशः अवलोक्यते ।

- वामनभट्टबाणः इति अस्य कवेः नाम ।
- आन्ध्रदेशीयः कविरयम् ।
- कोण्डवीटिप्रान्तस्य सम्राट् ‘वेमभूपालः’ इत्यस्य आस्थानकविरयम् ।
- आन्ध्रदेशीयकविः श्रीनाथकविसार्वभौमः अस्य समकालिकः आसीत् ।
- रचनाशैलि-भावप्रकटनादिषु बहुषु विषयेषु अयं बाणभट्टस्य अनुयायी इति भाति । अतः अभिनवबाणः इत्युपाधिः लब्धवानयम् ।

- कोण्डवीटिप्रान्तस्य् सम्राजः चरितमेव इदं ‘वेमभूपालचरितम्’ ।
- आख्यायिका –अन्तर्गतं काव्यमिदम् ।
- अस्य काव्यस्य ‘वीरनारायणचरितम्’ इति नामान्तरमस्ति ।
- काव्येऽस्मिन् चत्वारः उच्छ्वासाः सन्ति ।

**Contd.....**

- अस्य सम्राजः वेमभूपालस्य वंशक्रमः, तस्य राज्यं, राज्यपालनं, दिग्विजययात्राः, राज्यविस्तरः, इत्यादीन् नैकान् अंशान् उररीचकार कविः ।
- चण्डिकालयवर्णनं, द्राक्षारामक्षेत्रवर्णनम्, राज्ञः दिग्विजययात्रावर्णनम् इत्यादिषु बहुषु सन्दर्भेषु अस्य कवेः वर्णनाचातुर्यं दृश्यते ।

